सुबाहोर् निधनं चात्र मारीचस्य च मर्त्सनम् ।
विश्वामित्रस्य चैवर्षेः स्व-वंश-परिकीर्तनम् ॥१८॥
गङ्गायाः प्रभवश् चैव पवित्रः परिकीर्तितः ।
दिव्य-गर्भावपतनं कार्त्तिकेयस्य संभवः ॥१९॥
विशालस्य च राजर्षेर् वंशस्य परिकीर्तनम् ।
अहल्या-शाप-मोक्षश् च मिथिलायाश् च दर्शनम् ॥२०॥
दर्शनं यज्ञ-वाटस्य मैथिलस्य च दर्शनम् ।
चरितं चैव कार्त्स्न्येन कौशिकस्य महात्मनः ॥२१॥
कथितं चात्र रामस्य शतानन्देन धीमता ।
धनुषो भेदनं चैव कन्यायाश् च निवेदनम् ॥२२॥
राज्ञो दशरथस्येह जनकस्य च संगमः ।
सीतादीनां च कन्यानां विवाहः समुदाहृतः ॥२३॥
वधूर् गृहीत्वा नृपतेर् यानं दशरथस्य च ।
समागमश् च रामस्य जामदग्न्येन धीमता ॥२४॥
जामदग्न्यस्य लोकानां वधश् चात्रानुकीर्तितः ।
अयोध्या-संप्रवेशश् च प्रवासो भरतस्य च ॥२५॥
अयोध्या-वासिनां चैव प्रमोदः परिकीर्त्यते ।
इत्य् एतत् प्रथमं काण्डम् आदि-काण्डम् इहोच्यते ॥२६॥
सर्गाश् चैव चतुः-षष्टिः श्लोकानां चैव कीर्त्यते ।

द्वे सहस्रे शतान्य् अष्टौ श्लोकाः पञ्चाशद् एव तु ॥२७॥
बाल-चर्या हि यत्रोक्ता राघवस्य महात्मनः ।
अतः परं द्वितीयं तु अयोध्या-काण्ड-संज्ञितम् ॥२८॥
यत्राभिषेक-संकल्पो व्याघातश् चैव कीर्त्यते ।
कैकेय्य्-अनुनयश् चैव शोको दशरथस्य च ॥२९॥
वन-प्रयाणं रामस्य लक्ष्मणानुगमस् तथा ।
विषादः प्रकृतीनां च तथैव च विसर्जनम् ॥३०॥
निषादाधिप-संवादः सूतस्य च विसर्जनम् ।
गङ्गायाश् चाभिसंतारो भरद्वाजस्य दर्शनम् ॥३१॥
वास्तु-कर्म-निवेशश् च चित्रकूटे महा-गिरौ ।
उपावृत्ते सुमन्त्रे च राज्ञो मोहागमः परः ॥३२॥
स्व-शाप-कथनं चैव स्वर्ग-प्राप्तिर् नृपस्य च ।
भरतागमनं तूर्णं तथा राज-गृहाद् अपि ॥३३॥
राम-प्रसादनार्थं च भरतस्य महात्मनः ।
गमनं कीर्त्यते वासो भरद्वाजस्य चाश्रमे ॥३४॥
दर्शनं चैव रामस्य पितुश् च सलिल-क्रिया ।
प्रसादनं च रामस्य बहुशः परिकीर्तितम् ॥३५॥
जाबालेर् यत्र वाक्यानि वामदेवस्य चोभयोः ।
इक्ष्वाकूणां च वंशस्य कीर्तनं समुदाहृतम् ॥३६॥

कीर्तिते. [४] क$_{१}$ मन्त्र°, म$_{२.३}$ तंत्र°.
१८ व$_{२}$ नास्ति ॥ [१] म$_{४.९-११}$ मरणं ~ निधनं. [२] क$_{१}$ म$_{४.६.७-९}$ देवर्षेः.
१९ म$_{१}$ प्रान्ते ॥ [१] म$_{४-६.९.१२}$ संभवश्. [२] व$_{२}$ °गर्भावतरणं.
२०[१] व$_{१}$ विशालस्यापि. [२] म$_{४-६.९-१२}$ धर्मस्य ~ वंशस्य. व$_{१}$ वंशश् च परिकीर्तितः. [३] म$_{२.३.७}$ अहिल्या°. म$_{२}$ अहिल्यायाः शाप-मोक्षो. म$_{४.९.१०}$ °निर्मोक्षो ~ °मोक्षश् च. [४] म$_{४.९.१०}$ मैथिलस्य.
२१ म$_{१}$ प्रान्ते ॥ [१.२] म$_{४.९.१०}$ नास्ति ॥ [२] म$_{५}$ व$_{३}$ मिथिलस्य. [१] म$_{१०}$ दर्शनं ~ चरितं.
२२ म$_{१}$ प्रान्ते ॥ [१] व$_{१}$ राघवस्यात्र ~ चात्र रामस्य.
२३[१-२] म$_{१}$ प्रान्ते ॥ [२] क$_{१}$ म$_{२}$ संभवः ~ संगमः. [४] क समुदीरितः, व$_{१}$ परिकीर्तितः.
२४ म$_{१}$ प्रान्ते ॥ [३] म$_{२.३}$ समागमं.
२५[१] व शेषश् ~ वधश्. म$_{७.९-११.१३}$ च परिकीर्तितः [४] म$_{२.३}$ प्रवेशो ~ प्रवासो.
२६[१] क$_{१}$ म$_{२.३}$ अयोध्या-वासनं. [२] क$_{१}$ म$_{१-३}$ परिकीर्तितः.
२७[१] म$_{८}$ व$_{३}$ चात्र ~ चैव. [२] व$_{३}$ कथ्यते. [४] क$_{१}$ म$_{१-३.७}$ पञ्च-दशैव तु. म$_{१२}$ व$_{१}$ च ~ तु.
२८[१] म$_{४.६.९.१२}$ च ~ हि. म$_{१}$ या प्रोक्ता ~ यत्रोक्ता. [३] क$_{१}$ म$_{१.७.१२.१३}$ व तद् ~ तु.
२९[१] म$_{१२}$ °संघातो ~ °संकल्पो. [२] म$_{४.९.११}$ वर्ण्यते ~ कीर्त्यते. [३] म$_{१-४.६.७.९-११}$ कैकेय्यानुनयश् (म$_{१}$ कैक०)
३०[२] क$_{१}$ म$_{१-३}$ लक्ष्मणानुगतिस्. म$_{६.८.१०.११.१३}$ तदा ~ तथा.
३१[१.२] म$_{८}$ व$_{२}$ नास्ति ॥ [२] म$_{४.९.१०}$ °संवासः.
[३.४] क$_{१}$ नास्ति ॥ [३] म$_{२.३}$ निषादाधिप-संवादः (३१[१] पुनर्-उक्तिः) व$_{४}$ चापि° ~ चाभि°. [४] क$_{१}$ म$_{३-५.७-१३}$ भारद्वाजस्य.
३१[४] अधिपाठः क$_{१}$ म$_{१.३.७}$ व$_{१.३.४}$
भारद्वाजस्य चैवाज्ञा चित्रकूटस्य दर्शनम् ।
३२[२] म$_{२.३}$ महात्मनोः ~ महा-गिरौ. [३] म$_{४.९.११}$ तु ~ च. [४] म$_{४-९.१३}$ पुनः, म$_{८}$ ततः ~ परः.
३३[२] म$_{१२}$ पूर्वं ~ तूर्णं.
३४ म$_{२.३}$ नास्ति ॥ [१] म$_{४.९.११}$ °प्रसादनं चाथ, म$_{५.६.८.१२}$ °प्रसादनार्थं च. [२] म$_{८}$ भरतागमनं तथा.
[३.४] म$_{८}$ नास्ति ॥ [३] म$_{४-६.९-१२}$ चैव ~ वासो. [४] क$_{१}$ म$_{१-३.१०.१२.१३}$ भार°.
३५[१.२] म$_{२.३}$ नास्ति ॥ [४] म$_{४}$ परिकीर्त्यते.
३६[१] क$_{१}$ म$_{१}$ राम-देवस्य. [४] म$_{८}$ वंशस्य कथनं तथा.

प्रतिज्ञां चैव रामस्य गमने कोसलान् प्रति ।
पादुकाहरणं चैव भरतस्य विसर्जनम् ॥३७॥
नन्दि-ग्राम-प्रवेशश् च मातॄणां च विसर्जनम् ।
अयोध्या-संप्रवेशश् च शत्रुघ्नस्य महात्मनः ॥३८॥
काण्डं द्वितीयम् इत्य् उक्तम् अयोध्या-काण्ड-संज्ञितम् ।
अशीतिः संख्यया सर्गाः श्लोकानां चात्र कीर्त्यते ॥३९॥
त्रीणि श्लोक-सहस्राणि नव श्लोक-शतानि च ।
श्लोकानां द्वे शते चैव भूयः श्लोकाश् च सप्ततिः ॥४०॥
अतः परं तृतीयं तु आरण्यकम् इति स्मृतम् ।
यत्र रामो महा-बाहुर् दण्डकं प्राविशद् वनम् ॥४१॥
अनसूया-समस्या च अङ्ग-राजस्य चार्पणम् ।
विराध-दर्शनं चैव वधश् च समुदाहृतः ॥४२॥
ऋषीणां दर्शनं चैव मैथिल्याश् चैव सान्त्वनम् ।
शरभङ्गाश्रम-प्राप्तिर् महेन्द्रस्य च दर्शनम् ॥४३॥
सुतीक्ष्णाश्रम-संप्राप्तिः संवादः सह सीतया ।
मन्दकर्णेन कथितं शक्रस्य च विसर्जनम् ॥४४॥
इल्वलस्य च संवादः कीर्तनं च दुरात्मनः ।
अगस्त्याश्रम-वासश् च तथा संपरिकीर्तितः ॥४५॥
दर्शनं पञ्चवट्यास् तु जटायोश् चैव दर्शनम् ।
जनस्थान-निवासश् च त्रिशिरस्य च वर्णनम् ॥४६॥
स्मरणं भरतस्याथ कैकेय्याश् चैव गर्हणम् ।
संवादः शूर्पनखया विरूप-करणं तथा ॥४७॥
खरस्य च वधो घोरो दूषण-त्रिशिरो-वधः ।
लङ्का-प्रवेशो राक्षस्याः शूर्पनख्याः प्रकीर्तितः ॥४८॥
सीताया लोभनं चैव रावणस्यानुशब्दितम् ।
मारीचाश्रम-संप्राप्ती रावणस्य दुरात्मनः ॥४९॥
मारीचश् च मृगो भूत्वा वैदेहीं समलोभयत् ।
लोभयित्वा च वैदेहीं राघवस्यापकर्षणम् ॥५०॥
मारीचस्य वधश् चैव लक्ष्मणस्य विगर्हणम् ।
सीताया हरणं चैव संकरश् च महात्मनः ॥५१॥
हृतां च जानकीं मत्वा विलापो राघवस्य च ।
जटायोर् दर्शनं चैव सत्कारश् च महात्मनः ॥५२॥
गृध्र-राजस्य रामेण कृता चैव जल-क्रिया ।
कबन्धस्य वधः प्रोक्तः स्वर्ग-प्राप्तिश् च पुष्कला ॥५३॥
कबन्धस्य च वाक्येन सुग्रीवान्वेषणं परम् ।
शबरी-दर्शनं चैव पम्पायां परिदेवनम् ॥५४॥
इति काण्डं तृतीयं तु आरण्यकम् इति स्मृतम् ।
सर्गाणां तु शतं चैव सर्गाश् चैव चतुर्-दश ॥५५॥

---

३७$^{१}$ क$_{१}$ म$_{१-३.७.९}$ व अ-प्रतिज्ञा च (व चात्र) ~ प्रतिज्ञां चैव. क$_{१}$ धर्मस्य ~ रामस्य. $^{३}$म$_{१}$ चापि. $^{४}$म$_{१०}$ भरतस्यागमः पुनः.

३८ म$_{१२}$ नास्ति ॥ ३८$^{१-२}$ म$_{६.१०}$ नास्ति ॥ $^{१}$ व$_{३}$ नन्दि-ग्रामे.

३९$^{१}$ अधिपाठः क$_{१}$
प्रसादनं च रामस्य बहुशः परिकीर्तितः ।
$^{४}$ व$_{२}$ चानु- ~ चात्र. म$_{८}$ कीर्तनम्, व$_{३}$ कथ्यते.

४०$^{४}$ म$_{४-६.८.९.११.१२}$ पुनः ~ भूयः.

४१$^{१}$ क$_{१}$ म$_{१.२}$ व काण्डं ~ परं. $^{२}$व$_{१}$ श्रुतम् ~ स्मृतम्. $^{४}$म$_{८}$ दण्डकान्.

४२$^{१}$ म$_{३}$ अनुसूया°. म$_{२.७}$ अनुसूयाश्रमे चापि. क$_{१}$म$_{१.४-६.९.१०}$ चाप्य् ~ च.

४२$^{४}$-४३$^{४}$ म$_{१२}$ नास्ति ॥

४३$^{१}$ व$_{२}$ चापि ~ चैव. $^{२}$म$_{१}$ वैदेह्याश् ~ मैथिल्याश्. क$_{१}$ म$_{१-३.७}$ व$_{१.२.४}$ चापि ~ चैव.

४४$^{१}$ म$_{१२}$ नास्ति ॥ क$_{१}$ म$_{१.२}$ सुतीक्ष्णस्याश्रम-प्राप्तिः. $^{२}$म$_{२.३}$ संवासः. $^{३}$व मन्दकर्णोश् च. $^{४}$क$_{१}$ म$_{४.९}$ यत्र शत्रु-, म$_{२.३.११}$ व$_{२.३}$ यत्र शक्र- ~ शक्रस्य च.

४५$^{१}$ म$_{४.९}$ इल्लुलस्य, म$_{१२}$ इल्ललस्य. $^{३}$ म$_{४.९.११}$ °संवासस् ~ °वासश् च.

४६$^{१}$ क म$_{१-३.५-७.९.१२}$ व च ~ तु. $^{२}$व$_{१}$ चापि ~ चैव.

४७$^{२}$ म$_{२}$ कैकय्याश्. म$_{१-३}$ चाथ ~ चैव. $^{३}$क$_{१}$ म$_{२.३}$ व$_{२}$ शूर्पनख्याश् च, म$_{१}$ °णख्याश् च, म$_{६.७.११-१३}$ व$_{१.३.४}$ शूर्पणखया.

४८$^{१-२}$ म$_{५.६.१२}$ खर-दूषणयोश् चैव वधस् त्रिशिरसस् तथा ।
$^{४}$ म$_{२.३}$ परिकीर्तितम्.

४९$^{२}$ म$_{७}$ व$_{१.४}$ रावणस्याथ शब्दितम्, म$_{१२}$ °वर्णितम्.

५०$^{४}$ म$_{४}$ राघवस्यापि कर्षणम्, म$_{५.६}$ राघवस्याभि°.

५१$^{१-२}$ म$_{५}$ नास्ति ॥ $^{२}$म$_{२.३}$ दुरात्मताम्, म$_{११}$ अपगर्हणम्, म$_{१३}$ व च गर्हणम्. $^{३-४}$ म$_{३}$ नास्ति ॥ म$_{२.३}$ मारीचस्य संवादो राघवेण महात्मनः. $^{४}$ म$_{१.७.१०.१३}$ व सौमित्रेश् चात्र (व$_{२}$ चानु- ~ चात्र) संगमः.
$^{४}$ अधिपाठः म$_{१.७.१०}$ व
जटायुषो वधश् चात्र सीतायाश् च प्रदेशनम् ।
लक्ष्मणस्य संवादे राघवेण महात्मनः ॥
($^{२}$व प्रवेशनम्. $^{४}$व$_{२}$ महा-वने ~ महात्मनः)

५२ म$_{६}$ नास्ति ॥ $^{४}$ क$_{१}$ संकरश् ~ सत्कारश्.

५३$^{१}$ म$_{५.६.१२}$ व खग-राजस्य. $^{३}$ क$_{१}$ प्रोक्तोः, म$_{२.३}$ प्राप्तिः. $^{४}$ क$_{१}$ म$_{७.९-११}$ तु ~ च.

५४$^{१}$ म$_{५.६.१२}$ ततः, म$_{७}$ व$_{१.४}$ (व प्रान्ते) तदा, व$_{३}$ स्मृतम् ~ परम्. $^{४}$ म$_{४}$ °वेदनम् ~ °देवनम्. म$_{५.६.११.१२}$ पम्पायाश् चैव दर्शनम्.

५५$^{१}$ म$_{११}$ इदं ~ इति. म$_{१२}$ च ~ तु. $^{३}$म$_{५.८.१२}$ व च ~ तु.

चत्वारीह सहस्राणि श्लोकानां कीर्तितानि च ।
शतं चैवात्र विज्ञेयं श्लोकाः पञ्चाशद् एव तु ॥५६॥
अतः काण्डं चतुर्थं तु कैष्किन्धिकम् इति स्मृतम् ।
ऋष्यमूक-गिरि-प्राप्ती राघवस्य महात्मनः ॥५७॥
हनुमद्-दर्शनं चैव संवादश् चात्र कीर्त्यते ।
आरोहणं च शैलस्य ऋष्यमूकस्य कीर्तितम् ॥५८॥
राम-सुग्रीव-सख्यं च बालि-पौरुष-कीर्तनम् ।
सप्त-ताल-विभेदश् च प्रत्ययोत्पादनं तथा ॥५९॥
बालि-सुग्रीव-युद्धं च बालिनो वध एव च ।
अन्तःपुर-विलापश् च तारा-कारुण्यम् एव च ॥६०॥
सुग्रीवस्याभिषेकश् च करणं चाश्रमस्य च ।
विलापो राघवस्यात्र लक्ष्मणेन च सान्त्वनम् ॥६१॥
प्रावृड्-विलापश् चैवात्र शरद्-वर्णनम् एव च ।
विलापश् चैव शरदि समयस्य च लङ्घनम् ॥६२॥
सुग्रीवं प्रति रामस्य कोपो यत्र च कीर्तितः ।
रामस्य कोपं विज्ञाय लक्ष्मणस्य च संभ्रमः ॥६३॥
प्रशमो लक्ष्मणस्याथ दौत्येन गमनं तथा ।
सुग्रीवस्य तथा चात्र गमनं राघवाश्रमे ॥६४॥
प्रसादनं च रामस्य वानराणां च संग्रहः ।
पृथिव्या वर्णनं चैव सुग्रीवेण महात्मना ॥६५॥
प्रस्थापनं वानराणाम् अङ्गुलीयस्य चार्पणम् ।
हनुमत्-प्रभृतीनां च विन्ध्य-पर्वत-लङ्घनम् ॥६६॥
स्वयंप्रभा-गुहायाश् च प्रवेश इह कीर्तितः ।
अ-प्रवृत्तौ च वैदेह्या विषाद-गमनं महत् ॥६७॥
प्रायोपवेशनं चात्र वानराणां महात्मनाम् ।
दर्शनं चात्र संपातेर् गृध्र-राजस्य धीमतः ॥६८॥
निवेदनं च लङ्काया गृध्र-राजेन धीमता ।
चतुर्थम् एतत् काण्डं तु कैष्किन्ध्यम् इति संज्ञितम् ॥६९॥
सर्गाश् चैवात्र विज्ञेयाश् चतुः-षष्टिस् तु संख्यया ।
श्लोकानां द्वे सहस्रे च अष्टौ श्लोक-शतानि च ॥७०॥
श्लोकानां शतं ज्ञेयं पञ्च-विंशतिर् एव च ।
अतः परं प्रवक्ष्यामि काण्डं सुन्दर-संज्ञितम् ॥७१॥
हनुमत्-प्लवनं यत्र सुरसायाश् च दर्शनम् ।
मैनाकस्य गिरेश् चैव दर्शनं परिकीर्तितम् ॥७२॥
निधनं सिंहिकायाश् च लङ्का-दर्शनम् एव च ।
प्रवेशश् चैव लङ्काया वर्णनं विचयस् तथा ॥७३॥
मार्गणं चैव वैदेह्या रावणान्तःपुरे शुभे ।
दर्शनं पुष्पकस्येह रक्षसां प्रमदा-वनम् ॥७४॥
दर्शनं राक्षसेन्द्रस्य रावणस्य दुरात्मनः ।
विचयः पुष्पकस्येह जानक्याश् चैव मार्गणम् ॥७५॥
अ-दर्शने च वैदेह्याः शोकोपगमनं तथा ।
प्रविश्याशोक-वनिकां वैदेह्याश् चैव दर्शनम् ॥७६॥

---

५६[1] म$_{२.३}$ चत्वारि च, म$_{८}$ चत्वाराधं-. [2] क$_{१}$ म$_{४.९.१०.११}$ कथितानि वै (म$_{१०}$ च). [3] म$_{४}$ विज्ञेयः. [4] म$_{१२}$ संज्ञितम् ~एव तु.

५७[1-2] म$_{१२}$ नास्ति ॥ [1] म$_{५.७}$ व$_{१.३}$ परं ~ काण्डं. म$_{५.६.८}$ व$_{३}$ प्रवक्ष्यामि ~ चतुर्थं तु. क$_{१}$ च ~ तु. [2] क$_{१}$ म$_{१०}$ कैष्किन्दिः, म$_{१-३}$ व$_{१.३}$ कैष्किन्ध्यम्, म$_{५.७.८}$ किष्किधाम्, म$_{६}$ कैष्किधम्. म$_{७.८}$ काण्ड ~ इति. म$_{५.६-८}$ व$_{१.३}$ संज्ञितम्. [3-4] म$_{८}$ नास्ति ॥

५८[2] म$_{१.२.३.७}$ व$_{२.४}$ चैव ~ चात्र.

५९[2] व$_{१.४}$ सप्त-साल°. म$_{७}$ व$_{४}$ °प्रभेदश्. [4] म$_{१०}$ हरेः ~ तथा.

६०[2] म$_{७}$ °विलापं, म$_{१२}$ °विनाशश्, व$_{१.४}$ °निवासश्.

६१[1] म$_{१२}$ °भिषेकस्य ~ °भिषेकश् च. [2] व$_{१}$ यौवराज्यं च तस्यात्र. [4] म$_{२.३}$ नास्ति ॥ व$_{१}$ लक्ष्मणस्य.

६२ म$_{२.३}$ नास्ति ॥ [4] म$_{१}$ वर्णनम् ~ लङ्घनम्.

६३[1-2] म$_{२}$ नास्ति ॥ [2] व$_{३}$ अत्र ~ यत्र. म$_{६}$ व प्रकीर्तितः.

६४[1] म$_{७}$ व$_{३.४}$ प्रेषणं ~ प्रशमो. [2] म$_{५-७.१२}$ व तथा. [4] म$_{१-३}$ °श्रमम्.

६५[1] म$_{६}$ प्रसादेन. [2] म$_{५.६.११.१२}$ संगमः. [3] क$_{१}$ म$_{४.९-११}$ सर्वे ~ चैव.

६६[1] व$_{३}$ प्रस्थानं वानराणां च. [2] व अङ्गुरीयस्य.

६७[1] म$_{५.६.१२}$ प्रवेशः परिकीर्तितः. [3] म$_{२.३}$ अल्पवृत्तौ. [3-4] म$_{१२}$ नास्ति ॥ [4] व$_{१-३}$ तथा ~ महत्.

६८[1] व$_{४}$ दर्शनश् चैव.

६९[1-2] म$_{१२}$ नास्ति ॥ [1] म$_{६}$ निदर्शनं. [2] म$_{२}$ °राजस्य. म$_{५.६}$ कीर्तितम् ~ धीमता. [4] म$_{४.६.७.९-११.१३}$ स्मृतम्, म$_{१२}$ कीर्तितम्.

७०[2] क$_{१}$ म$_{२-५.६.१२}$ संज्ञया ~ संख्यया. [3] म$_{७}$ व$_{४}$ सहस्रे तु, म$_{९.१०}$ सहस्रेण.

७२[1] क$_{१}$ म$_{४.९}$ °लंघनं, म$_{२.३}$ °क्रमणं, म$_{१२}$ °सवनं. म$_{५.६.८.१२}$ व$_{१.४}$ चैव ~ यत्र. [3] म$_{५.६.८.१२}$ सिंहिकायाश्.

७३ म$_{११}$ नास्ति ॥ [3-4] म$_{५.६.८.१२}$ नास्ति ॥ [4] म$_{१.४}$ विजयस्, म$_{२}$ विषयस्, म$_{७}$ चिन्तयस्.

७४ म$_{५.६.८.१२}$ नास्ति ॥ [1] क$_{१}$ मार्गणश्. [2] व$_{२}$ तथा ~ शुभे. [4] म$_{१-३.७.१३}$ व आपानस्य च वर्णनम्.

७५ क$_{१}$ म$_{४.९}$ नास्ति ॥ [1] म$_{५.६.८-११.१२}$ प्रवेशो ~ दर्शनं. [3] म$_{२.३}$ विजयं, म$_{१०}$ दर्शनं ~ विचयः.

७६[1] क$_{१}$ म$_{४.६.९}$ नास्ति ॥ म$_{१}$ प्रान्ते ॥ [1] म$_{५.६.१२}$ व$_{१-३}$ अ-दर्शनेन.

प्रवेशो रावणस्येह रक्षसः प्रमदा-वनम् ।
प्रलोभनं च सीताया रावणस्य च भर्त्सनम् ॥७७॥
तर्जनं राक्षसीनां च हनुमद्-दर्शनं तथा ।
चूडा-मणि-प्रदानं च प्रतिसंदेश एव च ॥७८॥
वन-प्रभङ्गः क्रूराणां राक्षसानां च गर्जनम् ।
किङ्कराणां वधश् चैव मन्त्रि-पुत्र-वधस् तथा ॥७९॥
कीर्तितं द्वन्द्व-युद्धं च हनुमन्-मेघनादयोः ।
ब्रह्मास्त्रेण च बन्धो वै मारुतेः परमाद्भुतः ॥८०॥
निवेदनं च दूतस्य भर्त्सनं च हनूमतः ।
लाङ्गूलोद्दीपनं चैव लङ्का-दाहस् तथैव च ॥८१॥
सीताया दर्शनं भूयः प्रत्यागमनम् एव च ।
जाम्बवत्-प्रमुखैश् चैव हरिभिः सह संगमः ॥८२॥
तथा मधुवन-प्राप्तिर् मधूनां च विलोपनम् ।
दर्शनं देव-मार्गस्य भङ्गो मधु-वनस्य च ॥८३॥
अङ्गद-प्रमुखानां च हरीणां राम-दर्शनम् ।
हनुमतः परिष्वङ्गो राघवेण महात्मनः ॥८४॥
प्रवृत्तिश् चैव सीताया मणि-दानं तथैव च ।
लङ्काया दर्शनं चैव दर्शनं रावणस्य च ॥८५॥
सीताया दर्शनं चैव प्रतिसंदेश एव च ।
दुर्ग-कर्म-विधानं च राक्षसानां विचेष्टितम् ॥८६॥
अशोक-वनिका-भङ्गं दुर्गस्य च विनाशनम् ।
यत्रैतत् कथयामास हनुमान् राघवाय वै ॥८७॥
यत्र सुग्रीव-सहितो राघवः सह-लक्ष्मणः ।
महता हरि-सैन्येन प्रययौ दक्षिणा-मुखः ॥८८॥
सर्वे च सहिता यत्र निविष्टाः सागरं प्रति ।
इत्य् एतत् सुन्दर-काण्डं पञ्चमं परिकीर्तितम् ॥८९॥
सर्गाणाम् अत्र संख्या च काण्डे सुन्दर-संज्ञिते ।
चत्वारिंशत् त्रयश् चैव सर्गाश् च समुदाहृताः ॥९०॥
श्लोकानां द्वे सहस्रे च चत्वारिंशच् च पञ्च च ।
अतः परं तु षष्ठं च युद्ध-काण्डम् इति स्मृतम् ॥९१॥
यत्र रामो महा-बाहुः सागरं समुपस्थितः ।
यत्र लङ्कां जिगमिषुर् मन्त्रयामास राघवः ॥९२॥
प्राप्तं च राघवं श्रुत्वा मन्त्रयामास रावणः ।
क्षमार्थी यत्र रामेण ज्येष्ठम् आह विभीषणः ॥९३॥
मुच्यतां मैथिली राजन् स्वस्त्य् अस्तु नगरस्य नः ।
एतद् धि परमं श्रेयो विपरीतो ऽनयो भवेत् ॥९४॥
एवम् उक्तो दशग्रीवः क्रोध-संरक्त-लोचनः ।
जघान यत्र पादेन भ्रातरं वै विभीषणम् ॥९५॥
रावणं च परित्यज्य चतुर्भिः सचिवैः सह ।
आगच्छद् राघवाभ्याशं गदा-पाणिर् विभीषणः ॥९६॥
अभिषिक्तश् च रामेण लङ्का-राज्ये विभीषणः ।
सागरात् तोयम् आदाय प्रयतेन महात्मना ॥९७॥
यत्र रामस्य संरम्भः समुद्रस्य च दर्शनम् ।
नल-सेतु-क्रिया चैव सागरानुमते तथा ॥९८॥
तरणं चैव घोरस्य सागरस्य महात्मनः ।
सुवेलासादनं चैव चार-प्रणिधिर् एव च ॥९९॥

---

७७ म$_{७}$ नास्ति ॥ [१-२] क$_{१}$ म$_{९}$ नास्ति ॥ [१] म$_{२.३}$ राक्षसेन्द्रस्य. [२] व$_{१.३.४}$ °वने. [३] व$_{४}$ वैदेह्या ~ सीताया.

७८[१] म$_{१}$ व$_{१-३}$ तार्जितं, व$_{४}$ गर्जितं.
[२] अधिपाठः म$_{१-३.६.१२}$ व
अभिज्ञान-प्रदानं च सीता-संभाषणं तथा ।

७९[१] क$_{१}$ म$_{४.९.१३}$ राक्षसीनां. म$_{१-३}$ तर्जनम्, म$_{४.५.७.१२}$ व भर्त्सनम्. [३] क$_{१}$ म$_{४.९}$ किंकरीणां. व$_{१.३}$ चात्र ~ चैव.
[४] अधिपाठः म$_{१.६.१२}$ व
सेनापति-वधश् चात्र अक्षस्य च वधस् तथा (म$_{१.६}$ चैव ~ चात्र)

८०[१] क$_{१}$ म$_{१.२.११}$ दुर्गं° ~ द्वन्द्व°.

८२[१] क$_{१}$ म$_{४.९.१०}$ हर्षणं ~ दर्शनं. म$_{१२}$ चैव ~ भूयः. [३] म$_{१२}$ जाम्बूवत् ~ जाम्बवत्°. [४] म$_{४}$ चैव ~ सह.

८३[२] म$_{५.६.७.१२}$ व विलुंठनम्, म$_{९}$ विलेपनम्. [३] व$_{१-३}$ देव-मार्गाभिरोहश् च. [४] क$_{१}$ म$_{४.९}$ सङ्गो.

८४ म$_{१२}$ नास्ति ॥ [३] म$_{२.३}$ नाम ~ राम°.

८५[१] व$_{१}$ चापि ~ चैव. [२-४] क$_{१}$ म$_{३.४.९.११}$ नास्ति ॥

८७[१] म$_{५.७.१२}$ व °भङ्गो. [२] व$_{१}$ निवेशनम्. [३] म$_{६.११.१२}$ यद् ~ यत्र.

८९[१] म$_{२.३}$ वर्ष-समाहिता यत्र. म$_{५.६. .१२}$ सर्वे च समाहितास् तत्र. [३-४] म$_{२.३.५-७.८.१२}$ व पञ्चमं काण्डं सुन्दरं. व$_{१.३}$ नाम ~ परि°.

९०[१] क$_{१}$ म$_{१.२}$ व$_{१.३.४}$ यत्र ~ अत्र. [२] क$_{१}$ °संज्ञके. [४] व$_{२.३}$ सर्गाः सम्यग् उदाहृताः.

९१[३] म$_{१.७.१२}$ व$_{२-४}$ च ~ तु.

९२[२] म$_{३.४.९}$ समरं ~ सागरं.

९४[१] म$_{५.६.१२}$ जानकी. [२] म$_{७}$ च ~ नः. [४] म$_{१.५-७.१२}$ विपरीते.

९५[२] व$_{३.४}$ कोप°. [४] व$_{१}$ तं, व$_{२}$ च ~ वै.

९६[१] क$_{१}$ व$_{३}$ तु, म$_{५}$ सं- ~ च. [४] क$_{१}$ °भ्याशे, म$_{१-३.५.७}$ °भ्यासं.

९७[१-२] क$_{१}$ म$_{४.६.९.१२}$ नास्ति ॥ [२] म$_{२.३.१०}$ काले ~ लङ्का°. [३] म$_{५.१२}$ आसाद्य ~ आदाय. [४] म$_{१.५-७.१२}$ व$_{१.४}$ प्रयत्नेन.

९९[१] म$_{५.६.१२}$ महाद्भुतम्. [३] म$_{६.९}$ °साधरं ~ °सादनं. [४] म$_{२}$ तथा लंकावरोधनं. म$_{२.३}$ (म$_{२}$प्रान्ते) चान-प्रणिधिर् एव च.

शुक-सारण-वाक्यं च वानरानीक-दर्शनम् ।
मन्त्रणं राक्षसेन्द्रस्य माया-राम-शिरः-क्रिया ॥१००॥
वाक्यानि सरमायाश् च सीताश्वासनम् एव च ।
यत्र माल्यवतो वाक्यं लङ्कायां सुषिर् एव च ॥१०१॥
मन्त्रणं राघव-बले चराणां च प्रवेशनम् ।
सुवेलारोहणं चैव तथा लङ्कावरोधनम् ॥१०२॥
समारम्भश् च युद्धस्य द्वन्द्व-युद्ध-प्रवर्तनम् ।
सुसन्न-यज्ञकोपादि-वधो यत्रानुशब्दितः ॥१०३॥
रात्रि-युद्ध-विधानं च शर-बन्धस् तथैव च ।
सुपर्ण-दर्शनं चैव अस्त्र-बन्धस्य मोक्षणम् ॥१०४॥
धूम्राक्षस्य वधश् चैव तथैवाकम्पनस्य च ।
प्रहस्तस्य वधश् चैव प्रभङ्गो रावणस्य च ॥१०५॥
दुर्ग-कर्म-विधानं च कुम्भकर्ण-प्रबोधनम् ।
दर्शनं कुम्भकर्णस्य संप्रश्नो रावणस्य च ॥१०६॥
निर्याणं कुम्भकर्णस्य वानराणां च संभ्रमः ।
सुग्रीव-ग्रहणं चैव मोक्षश् चात्र कीर्त्यते ॥१०७॥
वधश् च कुम्भकर्णस्य राघवात् समुदाहृतः ।
नरान्तक-वधश् चात्र देवान्तक-वधस् तथा ॥१०८॥
महापार्श्व-वधश् चात्र अतिकाय-वधस् तथा ।
मेघनादास्त्र-मोहश् च स-सैन्ये राघवे तथा ॥१०९॥
ओषध्य्-आनयनाच् चापि प्रबोधश् च हनूमता ।
उल्का मिहार-युद्धं च वधः कुम्भ-निकुम्भयोः ॥११०॥
मकराक्ष-वधश् चात्र निर्गमो रावणेः पुनः ।
माया-सीता-वधश् चात्र मेघनाद-वधस् तथा ॥१११॥
क्रोधश् च राक्षसेन्द्रस्य तथा निष्टानकं महत् ।
रावणस्य च निर्याणं विरूपाक्ष-वधस् तथा ॥११२॥
मत्तस्यापि वधश् चात्र उन्मत्त-वध एव च ।
राघवस्य च वाक्यानि भर्त्सनं रावणस्य च ॥११३॥
राम-रावणयोश् चैव अस्त्र-युद्धं महात्मनोः ।
लक्ष्मणस्य वधश् चैव विलापो राघवस्य च ॥११४॥
ओषध्य्-आनयनं चैव लक्ष्मणोत्थानम् एव च ।
प्रदानं देव-राजेन रथस्य च महात्मना ॥११५॥
मातलेर् दर्शनं चैव शक्र-वाक्य-निवेदनम् ।
संग्रामे राक्षसेन्द्रस्य प्रभङ्गो रावणस्य च ॥११६॥
सारथेर् भर्त्सनं चैव रावणेन दुरात्मना ।
देवानां विग्रहश् चैव गगने दानवैः सह ॥११७॥
द्वैरथं च महा-घोरं सप्ताहं क्षिति-कम्पनम् ।
वधश् च राक्षसेन्द्रस्य त्रिषु लोकेषु विश्रुतः ॥११८॥

---

१००[१] म$_{२.३}$ वानराणां च, म$_{४.९}$ वानरानेक-. [२] क$_{१}$ म$_{५}$ मन्त्राणां ~ मन्त्रणं. [३-४] व$_{२}$ नास्ति ॥ [४] म$_{२.३}$ संग्रामः शिरसः क्रिया. म$_{७}$ व$_{४}$ तथा ~ °क्रिया.

१०१ व$_{२}$ नास्ति ॥

१०२[१] क$_{१}$ म$_{१.५-७.१२}$ चाराणां, म$_{२.३}$ वानराणां, व$_{२}$ बलानां.

१०३[१-२] क$_{१}$ म$_{४.९}$ नास्ति ॥ [१] म$_{५.६.१२}$ आरम्भश् चैव युद्धस्य. [२] म$_{२.३}$ द्वन्द्व-युद्धं प्रवर्तते. [३] क$_{१}$ म$_{९.१०}$ ससन्न°, म$_{१}$ सुघुन्न° (प्रान्ते सुसन्न°) [४] क$_{१}$ म$_{४.९.१०}$ यत्राशु शब्दितः, व$_{२}$ यत्र विशब्दितः.

१०४-१०६ व$_{२}$ नास्ति ॥

१०४[१] म$_{१२}$ राम° ~ रात्रि°. [२] म$_{५.६.१२}$ सर्प° ~ शर°. [३] म$_{६}$ सपर्ण° ~ सुपर्ण°.

१०५[२-३] म$_{१२}$ व$_{३.४}$ नास्ति ॥

१०६[४] म$_{२.३.६.१२}$ राघवस्य ~ रावणस्य.

१०७[१] म$_{६}$ °हरणं ~ °ग्रहणं.

१०८[१] व$_{३}$ वधस् त्रिशिरसश् चैव. [२] क$_{१}$ म$_{४.६.७.९-११.१३}$ नरकान्त° ~ नरान्तक°. म$_{५.६.९.१२}$ चव ~ चात्र.
[४] अधिपाठः म$_{१-३.५-७.१२}$ व$_{१.२.४}$
महोदर-वधश् चात्र वधस् त्रिशिरसस् तथा ।

१०९[१] म$_{१.१२}$ व$_{१.२.४}$ चैव ~ चात्र. [२] म$_{१}$ अतिपार्श्व° ~ अतिकाय°. [३-४] व$_{३}$ नास्ति ॥ [३] म$_{३.५.६}$ °मोक्षश् ~ °मोहश्.

११०[१] म$_{२.३}$ अवध्य्-आनयनं, म$_{४.९}$ औषध्य्-आनयनश्, म$_{७}$ औषध्य्-आनयनं, म$_{१२}$ ओषध्य्-आनयणश्. म$_{१२}$ चैव ~ चापि. [२] म$_{५.६.१२}$ संप्रबोधो ~ प्रबोधश् च. [३] म$_{१}$ व$_{४}$ उल्काभिहरणं युद्धं (व$_{४}$ चैव), म$_{२.३}$ उल्कासिहरिणं युद्धं, म$_{५.६.१०.१२}$ उल्का-नीहार-युद्धं, म$_{७}$ उल्कासिहरणं चैव, व$_{३}$ उल्काभिहार-युद्धं.

१११[१] म$_{२.५.६.१२}$ चैव ~ चात्र. [२] व$_{३}$ निहतो ~ निर्गमो. म$_{५.६.१२}$ रावणस्य च. [३] म$_{१२}$ व$_{३}$ चैव ~ चात्र. [४] म$_{२}$ उन्मत्तमवध एव च.

११२[३] म$_{२.९}$ नास्ति ॥ म$_{५.६.१२}$ व$_{१}$ वि- ~ च.

११३[१-२] म$_{१}$ नास्ति ॥ [१] म$_{५}$ चैव ~ चात्र. [२] व$_{१.४}$ चोन्मत्त° ~ उन्मत्त°. [३] म$_{६.१२}$ रावणस्य. [४] म$_{१२}$ राघवस्य.

११४[१] म$_{१.५-७.१०}$ शस्त्र°, व$_{२.४}$ द्वन्द्व° ~ अस्त्र°. म$_{९}$ महात्मनः. [२] व$_{३}$ चापि ~ चैव.

११५[१] म$_{१-३}$ औषध्य्°.
[२] अधिपाठः म$_{५.६.१०.१२}$
मन्दोदर्यास् तथा केशाकर्षणं चागदेन च ।
[३] म$_{२.३.६}$ °राज्येन. [४] क$_{१}$ म$_{४.९.१०}$ महात्मनः.

११६[२] व$_{१.२}$ संग्रामो.

११७[२] म$_{७}$ विग्रहं. [४] म$_{५}$ गहने, म$_{९}$ गमने ~ गगने.

११८[१] म$_{४.६}$ द्वै°. म$_{६}$ °रथे, म$_{१०}$ °रथ्यं. [२] म$_{५.६.१२}$ भूमि°,

इति षष्ठम् इदं काण्डं युद्ध-काण्डम् इति स्मृतम् ।
सर्गाणां तु शतं ज्ञेयं पञ्च सर्गास् तथैव च ॥११९॥
काण्डे ह्य् अस्मिंस् तथा संख्या श्लोकानां चात्र शब्यते ।
चत्वार्य् एव सहस्राणि पञ्च श्लोक-शतानि च ॥१२०॥
अतस् त्व् अभ्युदयं नाम सोत्तरं संप्रचक्षते ।
यत्र रावण-दाराणां विलापः समुदाहृतः ॥१२१॥
विभीषणाभिषेकश् च सत्कारो रावणस्य च ।
हनुमत्-संप्रवेशश् च मैथिल्याश् चैव दर्शनम् ॥१२२॥
सीताया निर्गमश् चैव रामेण च समागमः ।
भर्त्सनं चैव सीताया राघवेण महात्मना ॥१२३॥
परित्यागं चैव वैदेह्यास् तथा चाग्नि-प्रवेशनम् ।
अग्नि-प्रवेशे च तदा अ-दाहं परमाद्भुतम् ॥१२४॥
ब्रह्मादीनां च सर्वेषां देवानाम् इह दर्शनम् ।
वृष-ध्वजस्य देवस्य दर्शनं चात्र कीर्त्यते ॥१२५॥
पितामहाद् वरश् चापि पितुर् दर्शनम् एव च ।
कैकेय्याः शाप-नाशश् चतुः-षष्टिर् दशरथस्य च ॥१२६॥
शक्राद् वरस्य संप्राप्तिर् हरीणां प्रतिजीवनम् ।
रत्नानां संविभागश् च राक्षसेन्द्रस्य धीमता ॥१२७॥
पुष्करारोहणं चैव राघवस्य महात्मनः ।
वानराणां च सर्वेषां राक्षसानां तथैव च ॥१२८॥

प्रतियानं च कथितं विस्तरेण महात्मनः ।
भरद्वाजाश्रम-प्राप्तिर् ऋषेर् दर्शनम् एव च ॥१२९॥
नन्दि-ग्राम-प्रवेशश् च गुरूणां चैव दर्शनम् ।
अयोध्यायां प्रवेशश् च व्रतस्य च समापनम् ॥१३०॥
अभिषेकश् च रामस्य प्रमोदो नगरस्य च ।
यौवराज्य-प्रदानं च भरतस्य महात्मनः ॥१३१॥
मुनीनाम् इह संप्राप्तिर् उत्पत्तिश् चैव रक्षसाम् ।
त्रैलोक्य-विजयाख्यानम् अहल्या-कीर्तनं तथा ॥१३२॥
सीता-विवासनं चैव लक्ष्मणेन महात्मना ।
वाल्मीक्य्-आश्रम-संप्राप्तिर् मैथिल्याश् चात्र कीर्त्यते॥१३३॥
कुशीलव-समुत्पत्तिर् इक्ष्वाकु-कुल-वृद्धये ।
लवणस्य वधश् चात्र शत्रुघ्नेन प्रकीर्तितः ॥१३४॥
शंबुकस्य वधश् चात्र कुम्भयोनि-समागमः ।
अलंकारस्य संप्राप्तिः श्वेतोपाख्यानम् एव च ॥१३५॥
अश्वमेध-समारम्भो गीत-श्रवणम् एव च ।
काव्यस्य चान्ते विज्ञाय स्व-पुत्रौ तौ कुशीलवौ ॥१३६॥
वाल्मीकेश् चैव वाक्यानि विलापो राघवस्य च ।
रसातल-प्रवेशश् च वैदेह्याः परमाद्भुतः ॥१३७॥
राघवस्य च संरम्भो दर्शनं परमेष्ठिनः ।
काल-दुर्वाससोः प्राप्तिः संत्यागो लक्ष्मणस्य च ॥१३८॥

म$_{७}$ भूत°, व$_{२}$ भू-प्रकम्पनम्. [४]म$_{२.३}$ विश्रुतम्.

११९[२] म$_{१}$ व$_{४}$ श्रुतम्. व$_{२}$ उदाहृतम् ~ इति स्मृतम्. [३]म$_{५.६.१२}$ व$_{३.४}$ च ~ तु.

१२०[१-१] म$_{८}$ नास्ति ॥ [२]म$_{१.७}$ व$_{२-४}$ चापि, म$_{५.६.१२}$ चैव ~ चात्र. म$_{२.३}$ वापियिष्यते ~ चात्र शब्यते. [३]क$_{१}$ म$_{४.९-११}$ अत्र ~ एव. [४]म$_{१२}$ पञ्च सर्गास् तथैव च.

१२१[१] क$_{१}$ °वक्ष्यते, म$_{२.३}$ व$_{२}$ °वक्ष्यते. [२]क$_{१}$ म$_{४.१०.११}$ °नारीणां ~ °दाराणां.

१२२[२] क$_{१}$ म$_{१०}$ संकरो, म$_{१.३.७}$ व$_{१.४}$ संस्कारो (म$_{१}$ प्रान्ते), म$_{५.६.१२}$ न्यक्कारो. [४]व$_{१}$ चापि ~ चैव.

१२३[१] व$_{१.३}$ चात्र ~ चैव. क$_{१}$ म$_{५.९}$ राघवेण ~ रामेण च. क$_{१}$ महात्मना.

१२४[१] म$_{२.५.६.१२}$ परित्यागश्. [२]म$_{५.६.१२}$ तथैवाग्नि°. [३]म$_{५.६.१२}$ व$_{१}$ तथा ~ तदा. [४]म$_{२.३.५-७.१२}$ अ-दाहः. म$_{२.३.५-७.१२}$ परमाद्भुतः.

१२५[१] म$_{५.६.१२}$ विष्णव्-आदीनां. [४]म$_{४}$ चास्य ~ चात्र.

१२६[१] क$_{१}$ म$_{२}$ पितामह-. म$_{२.३}$ वचश् ~ वरश्. क$_{१}$ म$_{१-३.७}$ व$_{३.४}$ चात्र ~ चापि. व$_{१.२}$ वर-प्राप्तिः, [२]म$_{६}$ पितृ- ~ पितुर्. [३]व$_{१.२}$ °मोक्षश् ~ °नाशश्.

१२७[१] म$_{२.३}$ देवेभ्यो वर- ~ शक्राद् वरस्य. [२]म$_{५.६.१२}$ जीवनं तथा. [३]म$_{२.३}$ प्रविभागश्.

१२८ म$_{५.६.१२}$ नास्ति ॥

१२९[१-१] म$_{५.६.१२}$ नास्ति ॥ [२]म$_{१.२.७}$ महात्मनाम्. [३]म$_{१.२.५}$ व भार°.

१३०[१] म$_{७}$ व$_{४}$ °निवेशश्. [२-४]म$_{२.३}$ नास्ति ॥ [३]म$_{५.१२}$ अयोध्या-संप्रवेशश्.

१३१[२] क$_{१}$ म$_{४.९}$ प्रसादो, व$_{१}$ प्रसीद, व$_{४}$ प्रमोदी.

१३२[१] म$_{५}$ चैव ~ इह. [१]क$_{१}$ राक्षसम्, म$_{५.६}$ राक्षसः. [४]म$_{२.३}$ अहिल्या°. म$_{४}$ तदा ~ तथा.

१३३[१] व$_{१}$ °निवासनं. [३]म$_{१-३.५}$ व वाल्मीकाश्रम°. [४]म$_{१-४.९-११}$ चाशु- ~ चात्र. व$_{१.२}$ कथ्यते.

१३४[३] म$_{७}$ व$_{४}$ चैव ~ चात्र. [४]क$_{१}$ म$_{४.९}$ नास्ति ॥ व$_{४}$ महात्मना.

१३५ म$_{२.३}$ नास्ति ॥ [१]क$_{१}$ म$_{९.११}$ नास्ति ॥ [३]म$_{६}$ अहंकारस्य.

१३६[१-२] म$_{२.३}$ नास्ति ॥ [२]क$_{१}$ रागे, म$_{२}$ गानं, म$_{३.४.९-११}$ गाने, म$_{६}$ कांते ~ चान्ते. [३-४]क$_{१}$ म$_{४.९-११}$ विज्ञेयौ सु- ~ विज्ञाय स्व-. [४]म$_{२.३}$ वंश-प्रभवैश् च तैः. म$_{५.६}$ तौ स्व-पुत्रौ.

१३७[१] व$_{४}$ चापि ~ चैव. म$_{५.६.१२}$ वाक्यांते.
[२]अधिपाठः व$_{१.३.४}$
सीतानयनम् अत्रैव सर्व-लोक-समीहितम् ।

सुहृदां चैव पौराणां वानराणां महात्मनाम् ।
महा-प्रस्थान-गमनं स्वर्ग-प्राप्तिश् च पुष्कला ॥१३९॥
इत्य् आभ्युदयिकं काण्डं स-भविष्यं सहोत्तरम् ।
नवतिः संख्यया सर्गाः श्लोकानां चात्र कीर्त्यते ॥१४०॥
त्रीणि श्लोक-सहस्राणि नव श्लोक-शतानि च ।
षष्टिः श्लोकास् तथा ज्ञेयाः काण्डे ऽस्मिन् परिसंख्यया ॥१४१॥
सर्गाणां षट् शतानीह विंशतिश् चैव संख्यया ।
इत्य् एतद् राम-संबद्धम् आख्यानम् ऋषि-संयतम् ॥१४२॥
चतुर्विंशति-साहस्रं सर्व-पाप-भयापहम् ।
आख्यानं वैष्णवं दिव्यं कृतं वाल्मीकिना स्वयम् ।
धन्यं यशस्यम् आयुष्यं पुत्रीयं पुष्टि-वर्धनम् ॥१४३॥
पठेद् इमां पर्वणि यः समाहितः
कथां शुचिर् दाशरथेर् महात्मनः ।
विमुच्यते ऽसौ कलुषेण मानवः
सुखं स गच्छेच् च मृतो ऽपि सद्-गतिम् ॥१४४॥

इत्य् आर्षे रामायण आदि-काण्डे तृतीयः सर्गः ॥

---

[४] म$_{७}$ सीतायाः ~ वैदेह्याः.

१३९ [१] म$_{१}$ सुहृदो, म$_{१२}$ सुहृदस्. म$_{४.७.९.१०.१३}$ घोराणां.
[२] म$_{५-७.१२}$ व$_{२-४}$ राघवाणां ~ वानराणां.
[१.२] व$_{१}$ सुहृदां चैव सर्वेषां पौराणां च महात्मनाम्.
[४] क$_{१}$ म$_{४.९.११}$ तु ~ च.

१४० [१] म$_{८}$ एतद् ~ इति. [३] म$_{२}$ सहोन्नतम् ~ सहो°. [४] म$_{५.६.८.१२}$ शब्द्यते ~ कीर्त्यते.

१४१ [१] म$_{५-८.१२}$ तावत्य् एव ~ नव श्लोक-. [४] म$_{२.३}$ °कीर्तिताः ~ °संख्यया.

१४२ [१] म$_{२.३}$ षट् शतानां हि. [२] व$_{३}$ कीर्तिता ~ संख्यया. [४] म$_{१}$ °संस्थतम्, म$_{२.३}$ °संस्कृतम्, म$_{५.६.११.१२}$ °सत्तमः ~ °संयतम्.

१४३ [१] म$_{६}$ पञ्चविंशति°. [१] म$_{५.६.१२}$ °प्रणाशनम् ~ °भयापहम्.
[३] म$_{५.१२}$ रुचिरं ~ वैष्णवं. [४] क$_{१}$ म$_{५}$ प्रजीयं, म$_{६}$ पूजीयं, म$_{१२}$ पूज्येयं.

१४४ [२] म$_{५.६.१२}$ शुचेर् ~ शुचिर्. [४] म$_{६.९.१३}$ व$_{२}$ सुखेन, म$_{४.५.१०-१२}$ सुखं च. क म$_{४.१२}$ संगतिम्.

अवसान-वचनम् ॥

अवसान-वचनं म$_{८}$ ग्रन्थे नास्ति ॥

म$_{६}$ श्री-महा-रामायणे ~ रामायणे.

क$_{१}$ म$_{२.६.७}$ आदि-काण्डे अनुक्रमणिकाध्याये (म$_{२.७}$ अनुक्रमणिका नाम) तृतीयः सर्गः, म$_{१}$ अनुक्रमणिका, म$_{३}$ व$_{४}$ अनुक्रमणिका नाम सर्गः, म$_{४.५.१२}$ अनुक्रमणिकाध्यायः (म$_{५.१२}$ °ध्याये) तृतीयः सर्गः, म$_{९-११}$ आदि-काण्डे अनुक्रमणिकाध्यायः, म$_{१३}$ बाल-काण्डे वाल्मीकिना विरचिते यनमो नाम सर्गः, व$_{२.३}$ आदि-काण्डे अनुक्रमणिका तृतीयः सर्गः (व$_{३}$ समाप्ता ~ तृतीयः सर्गः) ~ आदि-काण्डे तृतीयः सर्गः.

व$_{१}$ इत्य् आदि-काण्डे अनुक्रमणिका नाम सर्गः.

| वङ्ग-विशेषाः<br>१.४.३ | १.४.२ | दक्षिणापथ-विशेषाः<br>१.३.२ |
|---|---|---|
| * पूर्वं * | श्रुत्वा पूर्णं काव्य-बीजं<br>देवर्षेर् नारदाद् ऋषिः ।<br>लोकाद् अन्विष्य भूयश् च<br>चरितं चरित-व्रतः ॥१॥<br>उपस्पृश्योदकं सम्यङ्<br>मुनिः स्थित्वा कृताञ्जलिः ।<br>प्राचीनाग्रेषु दर्भेषु | श्रुत्वा वस्तु समग्रं तद्<br>धर्मात्मा धर्म-संहितम् ।<br>व्यक्तम् अन्वेषते भूयो<br>यद् वृत्तं तस्य धीमतः ॥ |
| काव्यस्यान्वेषते * | काव्यस्यान्वेषयन् गतिम् ।<br>तपो-बलेन चान्विष्य<br>चरितं भूरि-तेजसः ॥२॥ | धर्मेणान्वेषते गतिम् |
| १[१] <$म_{१-३}$ पूर्वं> | १[२] $क_{१}$ $म_{५.६.८.१२.१३}$ मुनिः ~ ऋषिः.<br>१[३] $क_{१}$ श्लोकम्, $म_{५.६.८.११}$ लोकम्.<br>१[४] $म_{१३}$ विस्तरं चरितं ततः.<br>२[२] $म_{२.३}$ स्थित्वा चैव ~ मुनिः स्थित्वा.<br>२[१-४] $म_{२.४.९-११}$ नास्ति ॥<br>२[६] $क_{१}$ $म_{५.६.८.१२}$ चरितेन च तेजसा. | २[४] <$व_{२}$ धर्मेणान्विष्य वाग्-यतः><br><br>२[४] अधिपाठः द<br>राम-लक्ष्मण-सीताभी<br>राज्ञा दशरथेन च ।<br>स-भार्येण स-राष्ट्रेण<br>यत् प्राप्तं तत्र तत्त्वतः ॥<br>हसितं भाषितं चैव<br>गतिर् या यच् च चेष्टितम् ।<br>तत् सर्वं धर्म-वीर्येण<br>यथावत् संप्रपश्यति ॥<br>स्त्री-तृतीयेन च तदा<br>यत् प्राप्तं चरता वने ।<br>सत्य-सन्धेन रामेण<br>तत् सर्वं चान्ववैक्षत ॥<br>ततः पश्यति धर्मात्मा<br>तत् सर्वं योगम् आस्थितः ।<br>पुरा यत् तत्र निर्वृत्तं<br>पाणाव् आमलकं यथा ॥<br>तत् सर्वं तत्त्वतो दृष्ट्वा<br>धर्मेण स महा-द्युतिः । |

वङ्ग-विशेषाः
१.४.५

(रिक्तम्)

३[४] अधिपाठः व$_{१}$

विश्वामित्रस्य चरितं
सम्त्रालम्भं तथैव च ।
ताडकायाश्च च निधनं
यज्ञ-वाट-निदर्शनम् ॥६२*॥

१.४.५

जन्म रामस्य सु-महद्
वीर्यं सर्वानुकूलताम् ।
लोकस्य प्रियतां क्षान्तिं
सौम्यतां सत्य-वाक्यताम् ॥३॥
मिथिला-गमनं चैव
धनुषश्च चैव भेदनम् ।
राम-राम-विवादं च
भयं दशरथस्य च ॥४॥
नाना चित्राः कथाश्च चान्या
विश्वामित्र-महामुनेः ।

३[२] क$_{१}$ म$_{५.६.८.१२}$ चैवा° ~ सर्वा°.
म$_{१}$ सत्त्वानुरूपताम् ~ °कूलताम्.
३[३] व$_{१}$ कान्ति ~ क्षान्तिं.
३[४] म$_{२.३}$ क्षान्ति° ~ सत्य°.

दक्षिणापथ-विशेषाः
१.३.१२

* सत्य-शीलताम्
नाना चित्राः कथाश्च चान्या
विश्वामित्र-समागमे ।
जानक्याश्च च विवाहं च
धनुषश्च च विभेदनम् ॥
राम-राम-विवादं च
गुणान् दाशरथेस्तु तथा ।

अभिरामस्य रामस्य
चरितं कर्तुम् उद्यतः ॥
कामार्थ-गुण-संयुक्तं
धर्मार्थ-गुण-विस्तरम् ।
समुद्रम् इव रत्नाढ्यं
सर्व-श्रुति-मनोहरम् ॥
स यथा कथितं पूर्वं
नारदेन महर्षिणा ।
रघु-वंशस्य चरितं
चकार भगवान् ऋषिः ॥६१*॥
([१२] द$_{७-१२}$ समवेक्षितं, द$_{९}$ चान्ववेक्षितम्.
[१८] द$_{८}$ महा-मतिः, द$_{९.१०}$ महार्थ-वित्, द$_{११}$ महा-मुनिः.
[२०] द$_{९.११}$ तत् सर्वं ~ चरितं.
[२१] द$_{७.११}$ °संपन्नं ~ °संयुक्तं.
[२६] द$_{८-११}$ महात्मना ~ महर्षिणा.
[२८] द$_{८.११}$ मुनिः ~ ऋषिः)

द$_{७}$ जन्मा° ~ सर्वा°.

| वङ्ग-विशेषाः १.४.७ | १.४.६ | दक्षिणापथ-विशेषाः १.३.१३ |
|---|---|---|
| | तथाभिषेकं रामस्य<br>कैकेय्या दुष्ट-भावताम् ॥५॥<br>व्याघातं चाभिषेकस्य<br>राघवस्य विवासनम् ।<br>राज्ञः शोकं विलापं च | <br><br>विघातं *<br>रामस्य च * |

४$^{१}$ म$_{२.३.७.९.१०.१२}$ मिथिलां.
म$_{१३}$ जनकेन विवाहं च.
४$^{२}$ म$_{१३}$ चापि ~ चैव.

$^{२}$द$_{२.३}$ °सहासने, द$_{८.९}$ °सहायने, द$_{११}$ °सहायतां.
$^{३}$द$_{९.१०}$ विवाहे.

४$^{३}$ क$_{१}$ म$_{४.६.८.१२}$ °विवादश्च.
म$_{१३}$ राम-रामस्य व्यवरं.
४$^{४}$ म$_{१}$ वाक्यं, म$_{२.३}$ नृणां, म$_{६.९.१०}$ गुणं,
म$_{१३}$ व्यवरं ~ भयं.
म$_{२.६}$ चित्र-.

५$^{१}$ व$_{१}$ पुण्या, व$_{१.४}$ ( व$_{१}$ प्रान्ते ) चर्या ~ चान्या.

५$^{१}$ <म$_{१३}$ विश्वामित्र-सहायनं>
५$^{२}$ द$_{७.१२}$ तदा° ~ तथा°.

५$^{४}$ म$_{१}$ < द$_{८.११}$ > °भावनां, म$_{२-४.६.१०.११}$ °भावनम् , म$_{१३}$ °भाविता.

५$^{४}$ अधिपाठः म$_{८}$
अयोध्या-वासिनां चैव
प्रमोदः परिकीर्त्यते ।
इत्य् एतद् प्रथमं काण्डम्
आदि-काण्डम् इहोच्यते ॥
सर्गाश् चात्र चतुः-षष्टिः
श्लोकानां चात्र कीर्त्यते ।
द्वे सहस्रे शतान्य् अष्टौ
श्लोकाः पंचाशद् एव तु ॥
बाल-चर्या च सप्रोक्ता
राघवस्य महात्मनः ।
श्लोका २८४० सर्गाः ६४॥
अतः परं द्वितीयं तु
अयोध्या-काण्ड-संज्ञितम् ॥६३*॥

६$^{१}$ म$_{२-४.१०.११}$ व्याघातश्.
६$^{२}$ क$_{१}$ म$_{५.६.१२}$ रामस्य च (म$_{५.१२}$ तु-) महात्मनः.

<म$_{१२}$ व$_{१}$ रामस्य च>

| वङ्ग-विशेषाः<br>१.४.९ | १.४.८ | दक्षिणापथ-विशेषाः<br>१.३.१५ |
|---|---|---|
| <br><br><br><br>* * विसर्जनम् | मोहं मरणम् एव च ॥६॥<br>प्रकृतीनां विषादं च<br>तथैव च विसर्जनम् ।<br>निषादाधिप-संवादं<br>सूतस्य च निवर्तनम् ॥७॥<br>गङ्गायाश् चैव संतारं<br>भरद्वाजस्य दर्शनम् ।<br>भरद्वाजाभ्यनुज्ञानाच् | पर-लोकस्य चाश्रयम्<br><br>प्रकृतीनां *<br><br>सूतोपावर्तनं तथा<br>* चापि * |
| ७$^{२}$ व$_{१}$ रामस्य गमनं तथा, व$_{१}$ प्रान्ते तथैव च विसर्जनम्.<br><br>७$^{२}$ अधिपाठः व$_{१.४}$<br>तमसायां निवासं च<br>प्रजानां च विसर्जनम् ।६४*।<br>अतः परं व$_{१}$<br>शृङ्गवेर-पुरे वासं<br>सूतस्य च विसर्जनम् ।६५*।<br><br>७$^{४}$ <म$_{१.७.१०}$ विसर्जनम् ><br>व$_{१}$ गङ्गा-कूले महात्मनः. | ६$^{२}$ म$_{१-३}$ <द$_{१}$> शोक-.<br>क$_{१}$ म$_{१२}$ विषादं, म$_{५}$ विवादं, म$_{६}$ विषादाश् ~ विलापं.<br><br>६$^{१-४}$ म$_{८}$ यत्राभिषेक-संकल्पो<br>व्याघातश् चैव कीर्त्यते ।<br>कैकेय्यानुनयश् चैव<br>शोको दशरथस्य च ॥<br>७$^{१}$ म$_{१}$ विषादश्.<br>म$_{८}$ विषादः प्रकृतीनां च.<br><br>७$^{३-४}$ म$_{८.१३}$ नास्ति ॥<br><व$_{३}$ निवर्तनम्><br><br>८$^{१-२}$ म$_{१३}$ नास्ति ॥<br>८$^{१}$ म$_{१}$ तारं च ~ संतारं.<br>८$^{२}$ म$_{४.९.१०.१२}$ भारद्वाजस्य. म$_{३}$ शासनम् ~ दर्शनम्.<br>८$^{३-४}$ म$_{५.८}$ <व$_{२}$> नास्ति ॥<br>८$^{३}$ म$_{४.७.९-१२}$ भा°.<br>म$_{१.३}$ भरद्वाजाभ्यनुज्ञां च, म$_{२}$ भरद्वाजस्यानुज्ञानाच्, म$_{४.९-११.१३}$ °भ्यनुज्ञानं. | ६$^{४}$ <म$_{१३}$ पर-लोकस्य चाप्रिये><br><br><म$_{८}$ चाभि-> |

| बङ्ग-विशेषाः १.४.११ | १.४.१० | दक्षिणापथ-विशेषाः १.३.१७ |
|---|---|---|
| | चित्रकूटस्य दर्शनम् ॥८॥<br>वास्तु-कर्म-निवेशं च<br>भरतागमनं तथा ।<br>प्रसादनं च रामस्य<br>पितुश् च सलिल-क्रियाम् ॥९॥<br>पादुकास्व् अभिषेकं च<br>नन्दि-ग्राम-निवेशनम् ।<br>दण्डकारण्य-गमनं | <br><br><br><br><br>पादुकाग्र्याभिषेकं *<br>°निवासनम् |

९[१] $म_{२.३.८}$ °निवेशश्, $म_{६}$ °कर्मणि वेशं.
९[२] $म_{८}$ चित्रकूटे महा-गिरौ.

९[१] अधिपाठः $म_{८}$
उपावृत्ते सुमन्त्रे च
राज्ञो मोहागमस् ततः ।
स्व-शाप-कथनं चैव
स्वर्ग-प्राप्तिर् नृपस्य च ॥
भरतागमनं तूर्णं
तथा राज-गृहाद् अपि ।
राम-प्रसादनार्थे च
भरतागमनं तथा ॥६६*॥

९[३] $क_{१}$ $म_{२.५.६.१२}$ आश्वासनं ($म_{२}$ प्रान्ते प्रसादनं), $म_{२}$ दर्शनं चैव ~ प्रसादनं.
९[४] $म_{४.७–९.११–१३}$ °क्रिया.

९[४] अधिपाठः $म_{८}$
प्रसादनं च रामस्य
बहुशः परिकीर्तितः ।
जाबालेर् यत्र वाक्यानि
वंशस्य कथनं तथा ॥
प्रतिज्ञा चैव रामस्य
गमने कोसलान् प्रति ।६७*।

१०[१] $व_{१}$ पादुका अभिषेकं च.

$म_{२.३}$ पादुकायाश् चाभिहरणं, $म_{४}$ पादुकस्याभिषेकं च.
१०[२] $क_{१}$ $म_{५.६.१२}$ °प्रवेशनम्.
१०[३] $म_{२.३}$ °रामेण ~ °गमनं.

१०[१–४] $म_{८}$
पादुकाहरणं चैव
भरतस्य विसर्जनम् ॥

| वङ्ग-विशेषाः १.४.११ | १.४.१२ | दक्षिणापथ-विशेषाः १.३.१९ |
| --- | --- | --- |
| | सुतीक्ष्णेन समागमम् ॥१०॥<br>अनसूया-समस्यां च<br>अङ्ग-रागस्य चार्पणम् ।<br>शरभङ्गाश्रमे वासं<br>वासवस्य च दर्शनम् ॥११॥<br>अगस्त्याश्रम-वासं च<br>अगस्त्याच् च विसर्जनम् ।<br>समागमं विराधेन<br>वासं पञ्चवटे तथा ॥१२॥ | विराधस्य वधं तथा ॥<br>दर्शनं शरभङ्गस्य<br>सुतीक्ष्णेन समागमम् ।<br>अनसूया-समस्यां च<br>अङ्ग-रागस्य चार्पणम् ॥<br>दर्शनं चाप्य् अगस्त्यस्य<br>धनुषो ग्रहणं तथा । |
| | नन्दि-ग्राम-निवेशश् च<br>मातॄणां च विसर्जनम् ।<br>अयोध्या-संप्रवेशश् च<br>शत्रुघ्नस्य महात्मनः ॥<br>काण्डं द्वितीयम् इत्य् उक्तम्<br>अयोध्या-काण्ड-संज्ञितम् ।<br>अशीतिः संख्यया सर्गाः ८०<br>श्लोकानां चात्र कीर्तनम् ॥<br>त्रीणि श्लोक-सहस्राणि<br>नव श्लोक-शतानि च ।<br>श्लोकानां द्वे शते चैव<br>पुनः श्लोकाश् च सप्ततिः ४१७०॥<br>अतः परं तृतीयं तु<br>आरण्यकम् इति स्मृतम् ।<br>यत्र रामो महा-बाहुर्<br>दण्डकान् प्राविशद् वनम् ॥६८*॥ | |
| | ११[१] म$_{१.७.१३}$ <द$_{९}$> अनुसूया°.<br>क$_{१}$ म$_{४.११.१२}$ °समस्या.<br>म$_{१३}$ समासाद्य ~ °समस्यां च.<br>म$_{३}$ अनुसूयया तु सीतायै.<br>११[३] म$_{१}$ शरभङ्गाश्रमाभ्याशे, म$_{३}$ शरभङ्गा-श्रम-संवासं, म$_{४.९–११.१३}$ शरभङ्गा-श्रमाभ्याशं.<br>११[४] म$_{१३}$ शक्रेण सह संगमः.<br>१२[१] क$_{१}$ म$_{५.६.८.१२}$ °वासश्.<br>१२[२] म$_{४.९.१०}$ अगस्त्यस्य ~ अगस्त्याच् च. | [३] द$_{३}$ समासंगम्.<br>[४] द$_{९}$ °समीपं, द$_{१२}$ °सहास्यं ~ °समस्यां.<br>द$_{११}$ °समाप्तिम् ~ °समस्यां च.<br><br>[६-७] द$_{१२}$ अगस्त्य-दर्शनं चैव शूर्पणख्याश् च दर्शनम्. |

| वङ्ग-विशेषाः १.४.१६ | १.४.१६ | दक्षिणापथ-विशेषाः १.३.२३ |
| --- | --- | --- |
| | हासं शूर्पनखायाश् च | शूर्पणख्याश् च संवादं |
| | विरूप-करणं तथा । | |
| | वधं खर-त्रिशिरसोः | |
| | कथनं रावणस्य च ॥१३॥ | उत्थानं * * |
| | मारीचस्य विनाशं च | * वधं चैव |
| | वैदेह्या हरणं तथा । | |
| जटायुषो वधश् * | जटायोर् निधनं चैव | } राघवस्य विलापं च |
| | विलापं राघवस्य च ॥१४॥ | } गृध्र-राज-निबर्हणम् |
| कबन्ध-ग्रहणं * | कबन्ध-दर्शनं चैव | |
| | कबन्धस्य वधं तथा । | पम्पायाश् चापि दर्शनम् |
| | शबर्या दर्शनं चैव | |
| | पम्पाया दर्शनं तथा ॥१५॥ | हनुमद्- * * |
| | विलापं चैव पम्पायां | |
| | राघवस्य महात्मनः । | |

१२$^{१}$ क$_{१}$ म$_{५.८.१२}$ कबन्धेन, म$_{६}$ विबन्धेन ~ विराधेन.

१३$^{१}$ हस्त-लेखेषु शूर्पनखा-शब्दे क्वापि नकारः क्वापि णकारः ॥
म$_{२.३}$ हास्यं. म$_{१३}$ शूर्पणखा-प्रहारे च.

१४ म$_{४.९.११}$ नास्ति (म$_{११}$ प्रान्त इतर-हस्तेन लिखितम्)

१४$^{१}$ क$_{१}$ म$_{५.६.८}$ मारीचिम्र-, म$_{१२}$ मारीचम्र-, म$_{१३}$ रावणस्य ~ मारीचस्य.
<द$_{५}$ विनाशं च>

१४$^{२}$ क$_{१}$ म$_{५.६.८.११}$ वैदेही-.
<व$_{१}$ प्रान्ते जटायु-निधनश्>

म$_{१०}$ <व$_{३}$> विलापो.

१६$^{१}$ म$_{२.३.५.६}$ <द$_{१}$> पम्पाया.

१६$^{२}$ अधिपाठः म$_{८}$
इति काण्डं तृतीयं तु
आरण्यकम् इति स्मृतम् ।
सर्गाणां च शतं चैव

१४$^{३}$ <म$_{१०}$ जटायुषो वधश् >
व$_{१}$ लक्ष्मणानुगमनं चैव.

१४$^{४}$ व$_{२.४}$ राघवस्य विलापनम्.

१५$^{१}$ <म$_{१-४.७.९.११.१३}$ °ग्रहणं>

१५$^{४}$ व$_{२.४}$ चैव दर्शनम् ~ दर्शनं तथा.

१५$^{२}$ द$_{१.३.७.८.१२}$ चैव ~ चापि.

१५$^{३}$-१६$^{२}$ द$_{५}$ नास्ति ॥

१५$^{३}$ द$_{८-१०}$ शबरी-.द$_{८.११}$ फल-मूलाशनं तथा.
< म$_{१३}$ हनुमद्->
द$_{८.११}$ प्रलापं.

| वङ्ग-विशेषाः<br>१.४.२० | १.४.१९ | दक्षिणापथ-विशेषाः<br>१.३.२६ |
|---|---|---|
| | ऋष्यमूकाभिगमनं<br>सुग्रीवेण समागमम् ॥१६॥<br>प्रत्ययोत्पादनं सख्यं<br>बालि-सुग्रीव-विग्रहम् ।<br>बालि-प्रमथनं राज्ये<br>सुग्रीव-प्रतिपादनम् ॥१७॥<br>तारा-विलाप-शमनं<br>वर्षा-रात्रि-निवासनम् ।<br>कोपं राघव-सिंहस्य<br>बलानाम् उपसंग्रहम् ॥१८॥<br>दिशः प्रस्थापनं चैव<br>पृथिव्याश् च निवेदनम् ।<br>अङ्गुलीय-प्रदानं च<br>तथैव बिल-दर्शनम् ॥१९॥ | ऋष्यमूकस्य गमनं<br><br><br><br>* चैव<br><br>तारा-विलापं समयं<br><br><br><br><br><br>अङ्गुलीयक-दानं *<br>ऋक्षस्य * |
| | सर्गाश् चैव चतुर्-दश ॥<br>चत्वारार्ध-सहस्राणि<br>श्लोकानां कीर्तितानि च ।<br>शतं चैवात्र विज्ञेयं<br>श्लोकाः पञ्चाशद् एव तु ॥<br>अतः परं प्रवक्ष्यामि<br>किष्किन्धा-काण्ड-संज्ञितम् ।६९*। | |
| १८$^{२}$ व$_{१}$ °विवासनम्. | १७$^{१}$ म$_{७}$ प्रत्ययो दर्शनं ~ प्रत्ययोत्पादन.<br>म$_{४.९-११}$ चैव ~ सख्यं.<br>१७$^{३}$ म$_{१३}$ राष्ट्रे ~ राज्ये.<br>क$_{१}$ म$_{१.१३}$ < द$_{१.१२}$ > °रात्र°.<br>१८$^{३}$ म$_{७}$ कोपो, म$_{१३}$ कोपाद्.<br>१८$^{४}$ म$_{४-६.८.९.१२}$ बालानाम्.<br>१९$^{१}$ क$_{१}$ म$_{५.६.८}$ दिक्षु, म$_{१३}$ < द$_{३}$ > दिशां.<br>म$_{१३}$ < द$_{३}$ > चापि ~ चैव.<br>१९$^{४}$ म$_{९.१२}$ वल्लि° ~ बिल°.<br>म$_{१३}$ तथा बिल-विदर्शनम्. | १८$^{१}$ द$_{११}$ °विलापनं चैव.<br><म$_{१-४}$ व$_{२.३}$ °विलाप-समयं, म$_{७.१०.११}$ °विलाप-समये, म$_{१३}$ °विलाप-संपन्नं><br>द$_{५}$ वर्ष-रात्रि°, द$_{८.९.११}$ <म$_{८}$> वर्ष-रात्र°.<br>द$_{११}$ उपसंगमम्.<br>१९$^{३}$ <म$_{१३}$ व$_{३}$ अङ्गुलीयक-दानं> |

| वङ्ग-विशेषाः १.४.२२ | १.४.२१ | दक्षिणापथ-विशेषाः १.३.२८ |
|---|---|---|
| | प्रायोपवेशनं चैव | * चापि |
| | संपातेश् चैव दर्शनम् । | * चापि * |
| | पर्वतारोहणं चैव | * चापि |
| | सागरस्य च लङ्घनम् ॥२०॥ | |
| | सिंहिका-दर्शनं चैव | सिंहिकायाश् च निधनं |
| | लङ्का-निलय-दर्शनम् । | °मलय° |
| रात्रि- * * | रात्रौ प्रवेशं लङ्कायां | * लङ्का-प्रवेशं च |

२० व$_{१}$ प्रान्ते इतर-इस्तश् च ॥
२०$^{१}$ व$_{४}$ प्रायोपदर्शनं.

२१$^{३}$ <म$_{१-४.७.९-१२}$ रात्रि->

म$_{१३}$ प्रायोपवेशं शोकं च.
<द$_{१२}$ चैव>
२०$^{३}$-२१$^{१}$ म$_{६.१२}$ नास्ति ॥

२०$^{३}$ अधिपाठः म$_{८}$
निवेदनं च लङ्कायां
गृध्र-राजेन कीर्तितम् ।
चतुर्थम् एतत् काण्डं वै
किष्किन्धाम् इति संज्ञितम् ॥
सर्गाश् चैवात्र विज्ञेयाश्
चतुः-षष्टिस् तु संख्यया ।
श्लोकानां च शतं ज्ञेयं
पञ्च-विंशतिर् एव च ॥
अतः परं प्रवक्ष्यामि
काण्ड-सुन्दर-संज्ञितम् ।
हनुमत्-प्लवनं चैव
सिंहिकायाश् च दर्शनम् ॥७०*॥

२०$^{३}$ <द$_{७.८.१२}$ चैव>
२०$^{३.४}$ म$_{८}$ मैनाकस्य गिरेश् चैव
दर्शनं परिकीर्तितम् ।

२१$^{१.२}$ म$_{१.४.९.१३}$ नास्ति ॥
२१$^{२}$ म$_{२.३.१०}$ लङ्का-लय-निदर्शनम्.
म$_{८}$ लङ्का-दर्शनम् एव च.
म$_{१}$ प्रवेशो.
२१$^{२.३}$ म$_{८}$ प्रवेशो राक्षसेन्द्रस्य
रावणस्य दुर्-आत्मनः ।

२०$^{१}$ द$_{११}$ चारु~चापि.

२०$^{४}$ द$_{८-११}$ सागरस्यापि.

२०$^{४}$ अधिपाठः द (उत्तरार्धं द$_{१-५.७.१२}$ नास्ति)
समुद्र-वचनाच् चैव
मैनाकस्य च दर्शनम् ।
राक्षसी-तर्जनं चैव
छाया-ग्राहस्य दर्शनम् ॥७१*॥

२१$^{१}$ <म$_{८}$ निधनं सिंहिकायाश् च>

| वङ्ग-विशेषाः १.४.२४ | १.४.२३ | दक्षिणापथ-विशेषाः १.३.३१ |
|---|---|---|
| | चिन्तां हनुमतस् तथा ॥२१॥<br>आपान-भूमि-गमनम्<br>अवरोधस्य दर्शनम् ।<br>अशोक-वनिका-यानं<br>सीतायाश् चापि दर्शनम् ॥२२॥<br>राक्षसी-तर्जनं चापि<br>रावणस्य च दर्शनम् ।<br>संभाषणं च मैथिल्या<br>अभिज्ञानस्य चार्पणम् ॥२३॥ | एकस्यापि विचिन्तनम्<br><br>त्रिजटा-स्वप्न-दर्शनम्<br>अभिज्ञान-प्रदानं च<br>रावणस्य च दर्शनम् |

$२१^{४}$ $क_{१}$ $म_{६}$ चिन्ता.
$म_{२.३}$ चिन्ता हनुमतस्य च.

$२१^{४}$ अधिपाठः $म_{८}$
विचयः पुष्पकस्येह
जानक्याश् चैव मार्गणम् ।
अ-दर्शनेन वैदेह्या
अशोकोपगमनं तथा ॥७२*॥

$२२^{१-२}$ $म_{८}$ नास्ति ॥
$२२^{१}$ $म_{४.९-११}$ आपानु°.
$म_{१३}$ °भूमौ.

$२२^{२}$ अधिपाठः द
दर्शनं रावणस्यापि
पुष्पकस्य च दर्शनम् ।७३*।
($^{१}$$द_{२.३}$ पुष्पकस्यापि )

$२२^{३-४}$ $क_{१}$ $म_{११.१३}$ नास्ति ॥
$२२^{३}$ $म_{५.६.१२}$ °वनिकायां च.
$म_{८}$ प्रविश्याशोक-वनिकां.
$२२^{४}$ $म_{८}$ वैदेह्याश् ~ सीतायाश्.
$म_{५-८.१२}$ <$व_{२.४}$ $द_{७}$> चैव ~ चापि.
$२३^{१-२}$ $म_{५.१३}$ नास्ति ॥
$२३^{१}$ $म_{१-४.९-११}$ <$व_{३}$ $द_{९}$ > °दर्शनं,
<$द_{७}$ °भर्त्सनं> ~ °तर्जनं.
$म_{१-४.७.९.११}$ <$द_{१२}$> चैव.
$म_{८}$ प्रवेशो रावणस्येह.

$व_{१}$ राक्षसी-दर्शनं चैव (प्रान्ते राक्षसी-तर्जनं चापि )

$२३^{३}$ $म_{८}$ रराम प्रमदा-वनम्.
$२३^{३-४}$ $म_{८}$ नास्ति ॥

$२३^{३}$ $व_{१.४}$ वैदेह्या ~ मैथिल्या.

| वङ्ग-विशेषाः १.४.२७ | १.४.२७ | दक्षिणापथ-विशेषाः १.३.३३ |
|---|---|---|
| | मणि-प्रदानं सीताया | |
| वृक्ष° * * | वन-भङ्गं तथैव च । | वृक्ष° * * |
| | राक्षसी-विद्रवं चैव | |
| | किंकराणां निबर्हणम् ॥२४॥ | |
| | ग्रहणं वानरेन्द्रस्य | * वायु-सूनोश् च |
| | लङ्का-दाहाभिमर्दनम् । | °भिगर्जनम् |
| | प्रतिप्रयाणम् एवापि | प्रतिप्लवनम् एवाथ |
| | मधूनां भक्षणं तथा ॥२५॥ | * हरणं * |
| * चैव | राघवाश्वासनं चापि | |
| | मणि-निर्यातनं तथा । | |

२४$^{१}$ व$_{3}$ °दानं च ~ °प्रदानं.
२४$^{२}$ <म$_{1-4.7.9-13}$ वृक्ष°>
२४$^{३}$ व$_{1}$ रक्षसां ~ राक्षसी°.

<व$_{1}$ द$_{2}$ वन°>
म$_{2.8.13}$ °भङ्गस्.
म$_{2.3}$ °विमर्दं ~ °विद्रवं.
२४$^{४}$ क$_{1}$ म$_{5.6.12}$ वधं तथा ~ निबर्हणम्.

२३$^{४}$ द$_{7-11}$ सीतायाश् चापि भाषणं.

२४$^{४}$ अधिपाठः उ

अमात्य-पुत्र-निधनं सेनापति-वधं तथा ।
अक्षस्य निधनं चापि निर्याणेन्द्रजितस् तथा ॥७४*॥

(²व$_{3}$ प्रान्ते मृत्युर् निधनम् एव च. ⁴व$_{2}$ मेघनादस्य निर्गमम् )

(¹म$_{2.3}$ °वधस्. ⁴क$_{1}$म$_{5.6.12}$निर्याते° म$_{2.3}$ याणमि° ~ निर्याणे°. म$_{13}$ निर्याणं मेघ-नादितः)

२५ म$_{6.12}$ नास्ति ॥
२५$^{१}$ म$_{1}$ <व$_{3}$> °भिमर्शनम्.
२५$^{२-४}$ म$_{13}$ नास्ति ॥

२५$^{३}$ व$_{3}$ प्रतिपूरणम्.

२६$^{१-२}$ म$_{13}$ समुद्र-तरणं चैव
राघवस्य च चिन्तनम् ।
२६$^{३}$ म$_{4}$ निर्याणेन्द्रजितस् तथा.

२६$^{१}$ अधिपाठः व$_{1}$
ततः समुद्र-गमनं
समुद्रस्य च दर्शनम् ।
विभीषणागमं चैव
अभिषेकं तथैव च ॥७५*॥

२६$^{१}$ अधिपाठः म$_{8}$
यत्र सुग्रीव-सहितो
राघवः सह-लक्ष्मणः ।
महता हरि-सैन्येन
प्रययौ दक्षिणा-मुखः ॥
सर्वे च सहितास् तत्र
निविष्टाः सागरं प्रति ।

| वङ्ग-विशेषाः १.४.३० | १.४.२९ | दक्षिणापथ-विशेषाः १.३.३६ |
| --- | --- | --- |
| | संगमं च समुद्रस्य | * * समुद्रेण |
| | नल-सेतोश् च बन्धनम् ॥२६॥ | |
| | प्रतारणं समुद्रस्य | प्रतारं च * |
| | रौद्रं लङ्कोपरोधनम् । | रात्रौ लङ्कावरोधनम् |
| | विभीषणेन संसर्ग | |
| | वधोपाय-निवेदनम् ॥२७॥ | |
| | कुम्भकर्णस्य च वधं | * निधनं |
| | मेघनाद-वधं तथा । | मेघनाद-निबर्हणम् |
| | रावणस्य विनाशं च | |
| | सीतावाप्तिं तथैव च ॥२८॥ | * अरेः पुरे |

इत्य् एतत् पञ्चमं काण्डं
सुन्दरं परिकीर्तितम् ॥
सर्गाणाम् अत्र संख्या च
काण्डे सुन्दर-संज्ञिते ।
चत्वारिंशत् त्रयश् चैव
सर्गास् सम्यग् उदाहृताः ॥
श्लोकानां द्वे सहस्रे च
चत्वारिंशच् च पञ्च च ।
सर्गाः ४३ । श्लोकाः २४५ ॥
अतः परं च षष्ठं च
युद्ध-काण्डम् इति स्मृतम् ।
यत्र रामो महा-बाहुः
सागरं समुपस्थितः ॥७६*॥

२६$^{३}$ म$_{८}$ संग्रामं ~ संगमं.
२६$^{४}$-२७$^{१}$ क$_{१}$ नास्ति ॥
२७$^{१२}$ म$_{५}$ नास्ति ॥
२७ म$_{१३}$ नास्ति ॥
२७$^{१}$ म$_{१.४.८.९-११}$ तरणं च, म$_{६.८.१२}$ प्रभावं च ~ प्रतारणं. म$_{२.३}$ यानं वानरेन्द्रस्य.
२७$^{२}$ म$_{१.८.११}$ रौद्र- ~ रौद्रं. क$_{१}$ लंकोपमर्दनम्. म$_{४.९.१०}$ रौद्र-लोको (म$_{९}$ लोके )परोधनम्.
२७$^{३}$ म$_{१ ४.९.११}$ संसर्गः.
२८$^{१}$ म$_{१३}$ वधो. म$_{२.३}$ राक्षसानां वधं चैव.
२८$^{२}$ म$_{२.३}$ °वधस्. म$_{१३}$ मेघनाद-निपातितम्.
२८$^{४}$ म$_{१}$ °प्राप्तिस्, म$_{२.३.७.१३}$ °वाप्तिस्.

(दक्षिणापथ-विशेषाः:) < म$_{७}$ प्रतारं च >

| वङ्ग-विशेषाः<br>१.४.३१ | १.४.३१ | दक्षिणापथ-विशेषाः<br>१.३.३७ |
|---|---|---|
| | विभीषणाभिषेकं च<br>पुष्पकारोहणं तथा ।<br>अयोध्यायाश् च गमनं<br>भरतेन समागमम् ॥२९॥<br>रामाभिषेकाभ्युदयं | पुष्पकस्य च दर्शनम् |
| | २८$^{४}$ अधिपाठ: म$_{८}$<br>द्वैरथं च महा-घोरं<br>सप्ताहं भूमि-कम्पनम् ।<br>वधश् च राक्षसेन्द्रस्य<br>त्रिषु लोकेषु विश्रुत: ॥<br>इति षष्ठम् इदं काण्डं<br>युद्ध-काण्डम् इति स्मृतम् ।<br>सर्गाणां च शतं ज्ञेयं<br>पञ्च सर्गास् तथैव च ॥<br>१०५ सर्गाः ।<br>चत्वार्य् एव सहस्राणि<br>पञ्च श्लोक-शतानि च ।<br>पुनस् तूर्य-सहस्राणि<br>युद्ध-काण्डे निदर्शिताः ४५०० ॥<br>अतस् त्व् अभ्युदयं नाम<br>सोत्तरं संप्रचक्ष्यते ।<br>यत्र रावण-दाराणां<br>विलापः समुदाहृतः ।७७*। | |
| | २९$^{१}$ म$_{६}$ °भिषेकश्. | २९$^{२}$ <म$_{११}$ पुष्पकस्य च दर्शनम्> |
| | | २९$^{२}$ अधिपाठः द$_{८}$ < म$_{१३}$ ><br>ब्रह्मादि-देवागमनं<br>सीतायाः प्रत्ययं प्रति ।७८*। |
| | २९$^{३}$ क$_{१}$ म$_{४-६.८.१०.१२}$ < द$_{२.१०}$ ><br>अयोध्यायां. | २९$^{४}$ द$_{८.११}$ भरद्वाज-समागमम्. |
| | | २९$^{४}$ अधिपाठः द$_{८.११}$<br>प्रेषणं वायु-पुत्रस्य<br>भरतेन समागमम् ।७९*। |
| | ३०$^{१.२}$ म$_{६.१२}$ नास्ति ॥<br>३०$^{१}$ क$_{१}$ म$_{५.८}$ °भ्युदयः. | |

**वङ्ग-विशेषाः**
१.४.३३

१.४.३२

हरि-रक्षो-विसर्जनम् ।
सीतायाश् च परित्यागं
प्रकृतीनां च रञ्जनम् ।
अनू-आगतं च यत् किंचित्
रामस्य वसुधा-तले ॥३०॥

इत्य् आर्षे रामायण आदि-काण्डे
तृतीयः सर्गः ॥३॥

**दक्षिणापथ-विशेषाः**
१.३.३८

सर्व-सैन्य-विसर्जनम्
स्व-राष्ट्र-रञ्जनं चैव
वैदेह्याश् च विसर्जनम्

---

३०[२] अधिपाठः क$_{१}$ म$_{५.७.८.११.१३}$ व$_{१.२.४}$
अगस्त्य-प्रमुखानां च महर्षीणां समागमम् ।८०*।
([१]व$_{२}$ अगस्त्य-प्रभृतीनां)
अतः परं व$_{१.२.४}$
राक्षसानां समुत्पत्तिं
रावणस्य जयं तथा ।८१*।

३०[३-४] म$_{१३}$ नास्ति ॥
३०[३] म$_{२.३}$ परित्यागः.
३०[४] क$_{१}$ म$_{५.६.८.१२}$ रञ्जनं प्रकृतेस् तथा.

३०[६] अधिपाठः द
तच् चकारोत्तरे काव्ये
वाल्मीकिर् भगवान् ऋषिः ।८२*।

अवसान-वचनम् ॥

उत्तरापथ-ग्रन्थेषु नात्र सर्ग-समाप्तिः ॥

द$_{१}$ आर्षे वाल्मीकि-रामायणे, द$_{२.३}$ श्रीमद्-रामायणे बाल-काण्डे, द$_{५}$ श्रीमद्-रामायणे, द$_{७}$ आर्षे श्रीमद्-रामायणे, द$_{८}$ आर्षे रामायणे बाल-काण्डे, द$_{९.१०}$ आर्षे रामायणे वाल्मीकीये बाल-काण्डे (द$_{१०}$ बाल-काण्डे नाम ), द$_{११}$ आर्षे वाल्मीकीये रामायणे बाल-काण्डे, द$_{१२}$ आर्षे रामायणे ~ आर्षे रामायणे आदि-काण्डे.

**वङ्ग-विशेषाः**
१.४.४०

**१.४.३९**

प्राप्त-राज्यस्य रामस्य
चरितं यच् च धीमतः ।
श्रुति-रत्न-चयाकीर्णं
काव्य-सागरम् अद्भुतम् ॥१॥
कृत्वा चेदम् अ-शेषेण
काव्यं रामायणाह्वयम् ।
चिन्तयामास क इदं
लोके ऽस्मिन् प्रथयिष्यति ॥२॥
अथ चिन्तयतस् तस्य
महर्षेर् भावितात्मनः ।
तदा जगृहतुः पादौ

☞ अतः परं म$_{१३}$ ग्रन्थो न प्रयुक्तः ॥
१[२] क$_{१}$ म$_{५-८.१२}$ तस्य ~ यच् च.

**दक्षिणापथ-विशेषाः**
१.४.४

वाल्मीकिर् भगवान् ऋषिः ।
चकार चरितं कृत्स्नं
विचित्र-पदम् आत्मवान् ॥
कृत्वापि तन् महा-प्राज्ञः
स-भविष्यं सहोत्तरम् ।
चिन्तयामास को न्व् एतत्
प्रयुञ्जीयाद् इति प्रभुः ॥
तस्य चिन्तयमानस्य

अगृह्णीतां ततः *

१[२] अधिपाठः क$_{१}$ म$_{५-८.१२}$ ८२*॥
( पाठान्तरं काण्डे ~ काव्ये )
अतः परं क$_{१}$ म$_{५-८.१२}$, १[२] परं म$_{१-४.९-११}$ व
अभ्यागमम् ऋषीणां च शत्रुघ्नस्य विसर्जनम् ।
वने प्रसूतिं सीताया लवणस्य रणे वधम् ॥
काल-दुर्वाससोः प्राप्तिं लक्ष्मणस्य विसर्जनम् ।
स्थापयित्वा सुतान् राज्ये यथा रामो दिवं गतः ॥
त्रैलोक्य-दर्शी तत् सर्वं तपो-योग-बलेन च ।
ददर्श चैव प्रत्यक्षं पाणाव् आमलकं यथा ॥
दृष्ट्वा चानु-अन्तरं चक्रे रामस्य चरितं महत् ।
धर्म-कामार्थ-संयुक्तं पुण्य-श्रवण-कीर्तनम् ॥८३*॥
( [३]व$_{२}$ राम- ~ वने. [५]म$_{२.३}$ प्राप्तिर्. [७]म$_{२.३}$ सुतं, म$_{७}$ सुतौ. म$_{२.३}$ राष्ट्रे. [९]म$_{१.३.४.११}$ व त्रैकाल्य°. [११]व$_{१-३}$ तत्र ~ चैव. [१२]व$_{१}$ तन्त्री-पाश-धरौ वने. [१४]क$_{१}$ म$_{५.६.८.१२}$ धर्मार्थ-काम°, म$_{२.३}$ धर्म-कमार्थ° )

१[१] म$_{४.९-११}$ °मयाकीर्णं.

१[४] अधिपाठः द
चतुर्विंशत्-सहस्राणि
श्लोकानाम् उक्तवान् ऋषिः ।
तथा सर्ग-शतान् पञ्च
षट् काण्डानि तथोत्तरम् ॥८४*॥

२[४] व$_{२}$ प्रथयेद् इति.

